स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।
भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ९७ ॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ।
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥९८॥
द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥९९॥

रूपादयो वक्ष्यन्ते । बुद्ध्यादयस्तु न तादृशाः । आत्मादेः कारणाभावात् । पाकजरूपादीनां कारणगुणपूर्वकत्वाभावात् अपाकजेत्युक्तम् ॥ ९४ ॥ ९५ ॥ ९६ ॥

स्पर्शान्ता इति । स्पर्शोऽन्तानुणो ग्राह्यः । एकपृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयात् एकत्वं पृथक्त्वञ्च ग्राह्यम् । पृथक्त्वपदेन चैकपृथक्त्वं विवक्षितम् ।

भवेदसमवायित्वमिति । घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति । एवं कपालादिपरिमाणादीनां घटादिपरिमाणाद्यसमवायिकारणत्वम् । एवं शब्दस्यापि द्वितीयशब्दं प्रति ॥ ९७ ॥

निमित्तत्वमिति । बुद्ध्यादीनाम् इच्छादिनिमित्तत्वादिति भावः ॥ ९८ ॥

द्विधैव कारणत्वमिति । असमवायिकारत्वं निमित्तकारणत्वञ्च । तथाहि उष्णस्पर्शं उष्णस्पर्शस्यासमवायी पाकजे निमित्तम् । गुरुत्वं गुरुत्वपतनयोरसमवायी प्रतिघाते निमित्तम् । वेगो वेगस्पन्दनयोरसमवायी अभिघाते

चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्यात् शुक्लादिकमनेकधा ॥१००

निमित्तम् । द्रवत्वं द्रवत्वस्यन्दनयोरसमवायि संग्रहे निमित्तम् । भेरीदण्डयोगः शब्दे निमित्तम् । भेर्य्याकाशसंयोगोऽसमवायी वंशदलद्वयविभागः शब्दे निमित्तम् । वंशदलाकाशविभागोऽसमवायीति । प्रादेशिकोऽव्याप्यवृत्तिः ॥ ९९ ॥

चक्षुरिति । रूपत्वजातिः प्रत्यक्षसिद्धा । रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेत् । मास्तु रूपशब्दप्रयोगस्तथापि नीलपीतादिष्वनुगतजातिविशेषोऽनुभवसिद्ध एव । रूपशब्दाप्रयोगेऽपि नीलो वर्णः पीतो वर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव । एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम् । न चैकैका एव नीलरूपादिव्यक्तय इत्येकव्यक्तिवृत्तित्वान्नीलत्वादिर्न जातिरिति वाच्यम् । नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात् । अन्यथा एकनीलनाशे जगदनीलमापद्येत । न च नीलरक्तादिसमवाययोरेव विनाशोत्पादविषयकोऽसौ प्रत्यय इति वाच्यम् । प्रतीत्या समवायानुल्लेखात् । न च स एवायं नील इति प्रत्ययाल्लाघवाच्चैक्यमिति वाच्यम् । प्रत्ययस्य तज्जातीयविषयकत्वात् । सैवेयं गुर्जरीतिवल्लाघवं प्रत्यक्षबाधितम् । अन्यथा घटादीनामप्यैक्यप्रसङ्गात् । उत्पादविनाशशब्दबुद्धेः समवायावलम्बनत्वापत्तेरिति । एतेन रसादिकं व्याख्यातम् । चक्षुर्ग्राह्यमिति । चक्षुर्ग्राह्य-

विशेषगुण इत्यर्थः। एवमग्रेऽपि। द्रव्यादेरिति। उपलम्भकम्। उपलब्धिकारणम्।

इदमेव विवृणोति। चक्षुष इति। द्रव्यगुणकर्म्मसामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम्। शुक्लादिकमनेकधेति। तद्रूपं शुक्लनीलपीतरक्तकर्बुरादिभेदादनेकप्रकारकं भवति। ननु कर्बुरं कथमिति रक्तरूपं भवति? इत्थं, नीलपीताद्यारब्धोऽवयवी न तावन्नीलरूपः अप्रत्यक्षप्रसङ्गात्। नापि व्याप्यवृत्तिनीलादिकमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसङ्गात् नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्। तस्मात् नानाजातीयरूपैरवयविनि विजातीयं चित्रमारभ्यते। अत एवैकं चित्रमित्यनुभवोऽपि। नानारूपकल्पने तु गौरवात्। इत्यञ्च नीलादीनां पीताद्यारम्भे प्रतिबन्धकत्वकल्पनात् अवयविनि न पीताद्युत्पत्तिः। एतेन स्पर्शो व्याख्यातः। रसादिकमपि नाव्याप्यवृत्तिकिन्तु नानाजातीयरसवदवयवैरारब्धेऽवयविनि रसाभावेऽपि न क्षतिः। तत्र रसनया अवयवरस एव गृह्यते रसनेन्द्रियादीनां द्रव्यग्रहसामर्थ्याभावात् अवयविनो नीरसत्वेऽपि क्षतेरभावात्। नव्यास्तु तत्राव्याप्यवृत्त्येव नानारूपम्। नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात्। अत एव,

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥

इत्यादिशास्त्रमप्युपपद्यते। न च व्याप्याव्याप्यवृत्तिजाती-

जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकम्।
रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥१०१॥
सहकारी रसज्ञाया नित्यतादि च पूर्ववत्।
घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः॥१०२
सौरभश्चासौरभश्च स द्वेधा परिकीर्त्तितः।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः॥१०३

ययोर्द्वयोर्विरोधः मानाभावात्। न च लाघवादेकं रूपम्। अनुभवविरोधात्। अन्यथा घटादेरपि लाघवादैक्यं स्यादिति। एतेन स्पर्शादिकं व्याख्यातमिति वदन्ति ॥१००॥

जलादीति। जलपरमाणौ तेजःपरमाणौ च रूपं नित्यं पृथिवीपरमाणुरूपन्तु न नित्यं पाकेन रूपान्तरोत्पत्तेः। न हि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते। न हि रक्तकपालस्य कपालिका नीलावयवा भवति। एवं क्रमेण परमाणावपि पाकसिद्धिः।

अन्यज्जलतेजःपरमाणुरूपभिन्नं रूपं सहेतुकं जन्यम्। रसं निरूपयति। रसस्त्विति ॥१०१॥

सहकारीति। रासनज्ञाने रसः कारणमित्यर्थः। पूर्ववदिति। जलपरमाणौ रसो नित्योऽन्यः सर्वोऽपि रसोऽनित्य इत्यर्थः। गन्धं निरूपयति। घ्राणग्राह्य इति। उपकारको घ्राणजन्यज्ञाने कारणमित्यर्थः। अन्यो गन्धः सर्वोऽनित्य एव ॥१०२॥

अनुष्णाशीतशीतोष्ण-
भेदात् स त्रिविधो मतः ।
काठिन्यादिः क्षितावेव
नित्यतादि च पूर्ववत् ॥ १०४ ॥
एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित् ।

स्पर्शं निरूपयति । स्पर्श इति । उपकारक इति स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः ॥ १०३ ॥

अनुष्णाशीत इति । पृथिव्या वायोश्च स्पर्शोऽनुष्णाशीतः । जलस्य शीतः । तेजस उष्णः । काठिन्येति । कठिनसुकुमारस्पर्शौ पृथिव्या एवेत्यर्थः । कठिनत्वादिकन्तु न संयोगनिष्ठो जातिविशेषः चक्षुर्ग्राह्यतापत्तेः । पूर्ववदिति । जलतेजोवायुपरमाणुस्पर्शा नित्यास्तद्भिन्नस्पर्शास्त्वनित्या इत्यर्थः ॥ १०४ ॥

एतेषामिति । एतेषां रूपरसगन्धस्पर्शानाम् । नान्यत्रेति । पृथिव्या हि रूपरसगन्धस्पर्शपरावृत्तिः पावकसंयोगादुपलभ्यते । न हि शतधापि ध्मायमाने जलादौ रूपादिकं परावर्त्तते । नीरे सौरभमौष्ण्यञ्च अन्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते । पवनपृथिव्योः शीतस्पर्शादिवत् । तत्रापि पृथिवीष्वपि मध्ये परमाणावेव पाक इति वैशेषिका वदन्ति । तेषामयमाशयः । अवयविनाऽवष्टब्धेष्ववयवेषु पाको न सम्भवति । परन्तु वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः । पुनश्च पक्वपर-

तत्रापि परमाणौ स्यात् पाको वैशेषिके नये॥ १०५॥

माणुसंयोगाद् द्व्यणुकादिक्रमेण पुनर्महावयविपर्य्यन्तमुत्पत्तिः। तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति। अथ द्व्यणुकादिविनाशमारभ्य कतिभिः क्षणैः पुनरुत्पन्ने रूपादिमद्भवतीति शिष्यबुद्धिवैशद्याय प्रक्रिया स्यात्। तत्र संयोगविभागयोरनपेक्षकारणं कर्म्म इति वैशेषिकसूत्रम्। स्वोत्तरवृत्तिभावान्तरानपेक्षत्वं तस्यार्थः। अन्यथा कर्म्मणोऽप्युत्तरसंयोगजनने पूर्वसंयोगनाशापेक्षणादव्याप्तिः स्यादिति। तत्र विभागजविभागानङ्गीकारे नव क्षणाः। तदङ्गीकारेऽपि विभागः किञ्चित्सापेक्षो विभागं जनयेत् निरपेक्षस्य तत्त्वे कर्म्मत्वं स्यात् तत्र यदि द्रव्यारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात् तदा दश क्षणाः। अथ द्रव्यनाशविशिष्टं कालमवयवं वापेक्ष्य विभागजविभागः स्यात् तदा एकादश क्षणाः। तथाहि वह्निसंयोगात् परमाणौ कर्म्म। ततः परमाण्वन्तरेण विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः। ततः परमाणौ श्यामादिनाशः। ततो रक्ताद्युत्पत्तिः। ततो द्रव्यारम्भानुगुणक्रिया। ततो विभागः। ततः पूर्वसंयोगनाशः। तत आरम्भकसंयोगः। ततो द्व्यणुकोत्पत्तिः। ततो रक्ताद्युत्पत्तिः। ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणक्रियाऽस्त्विति चेत्। न। अग्नि-

संयुक्ते परमाणौ यत् कर्म्म तद्विनाशमन्तरेण गुणोत्पत्ति-मन्तरेण च तत्र परमाणौ क्रियान्तराभावात् कर्म्मवति कर्म्मानुत्पत्तेः। निर्गुणे द्रव्ये द्रव्यारम्भानुगुणक्रियानुपपत्तेश्च। तथापि परमाणौ श्यामादिनिवृत्तिसमकालं रक्ताद्युत्पत्तिः स्यादिति चेत्। न। पूर्वरूपादिध्वंसस्य रूपान्तरे हेतुत्वात्। इति नव क्षणाः। अथ दश क्षणाः। सा च आरम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्यात्। तथाहि वह्निसंयोगाद् द्व्यणुकारम्भके परमाणौ क्रिया। ततो विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशविभागजविभागौ। ततः श्यामनाशपूर्वसंयोगनाशौ। ततो रक्तोत्पत्त्युत्तरसंयोगौ। ततो वह्निनोदनजन्यपरमाणुकर्म्मणो नाशः। ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणक्रिया। ततो विभागः। ततः पूर्वसंयोगनाशः। तत आरम्भकसंयोगः। ततो द्व्यणुकोत्पत्तिः। ततो रक्ताद्युत्पत्तिः। अथैकादश क्षणाः। वह्निसंयोगात् परमाणौ कर्म्म। ततो विभागः। ततो द्रव्यारम्भकसंयोगनाशः। ततो द्व्यणुकनाशः। ततो द्व्यणुकनाशविशिष्टं कालमपेक्ष्य विभागजविभागः। ततः पूर्वसंयोगनाशः। तत उत्तरसंयोगः। ततः परमाणुकर्म्मनाशः। ततोऽदृष्टवदात्मसंयोगाद् द्रव्यारम्भानुगुणक्रिया। ततो विभागः। ततः पूर्वसंयोगनाशः। ततो द्रव्यारम्भकसंयोगः। ततो द्व्यणुकम्। ततो रक्तादि। मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशरक्तोत्पादौ। तावत्कालनैकस्याग्नेरस्थिरत्वात्। किञ्च यद्युत्पादको नाशकस्तदा

नैयायिकानान्तु नये द्व्यणुकादावपीष्यते।
गणनव्यवहारे तु हेतुः संख्याऽभिधीयते ॥१०६॥

नष्टे रूपादावग्निनाशे नीरूपश्चिरं परमाणुः स्यात्। नाशकश्चेदुत्पादकस्तदा रक्तोत्पत्तौ तदग्निनाशे रक्तता न स्यात्। एवं परमाण्वन्तरे कर्म्मचिन्तनात् पञ्चमादिक्षणेऽपि गुणोत्पत्तिः। तथा हि एकत्र परमाणौ कर्म्म। ततो विभागः। तत आरम्भकसंयोगनाशपरमाण्वन्तरकर्म्मणी। ततश्च द्व्यणुकनाशः। परमाण्वन्तरकर्म्मजश्च विभाग इत्येकः कालः। ततः श्यामादिनाशः। विभागाच्च पूर्वसंयोगनाश इत्येकः कालः। ततो रक्तोत्पत्तिर्द्व्यारम्भकसंयोगश्चेत्येकः कालः। अथ द्व्यणुकोत्पत्तिः अथ रक्तोत्पत्तिरिति पञ्च क्षणाः। द्रव्यनाशसमकालं परमाण्वन्तरे कर्म्मचिन्तनात् षष्ठे गुणोत्पत्तिः। तथाहि परमाणुकर्म्मणा परमाण्वन्तरविभागः। तत आरम्भकसंयोगनाशः। अथ द्व्यणुकनाशपरमाण्वन्तरकर्म्मणी। अथ श्यामनाशः परमाण्वन्तरकर्म्मजश्च विभागः। ततो रक्तोत्पत्तिः परमाण्वन्तरे पूर्वसंयोगनाशश्च। ततः परमाण्वन्तरसंयोगः। ततो द्व्यणुकोत्पत्तिः। अथ रक्तोत्पत्तिरिति। एवं श्यामनाशक्षणे परमाण्वन्तरे कर्म्मचिन्तनात् सप्त क्षणाः। रक्तोत्पत्तिसमकालं परमाण्वन्तरे कर्म्मचिन्तनात् अष्ट क्षणाः इति ॥१०५॥

नैयायिकानामिति। नैयायिकानां मते द्व्यणुकादौ अवयविन्यपि पाको भवति। तेषामयमाशयः। अवयविनां

नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते।
द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः॥१०७
अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः॥१०८॥

सच्छिद्रत्वाद्घटे: सूक्ष्मावयवैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाको न विरुध्यते। वैशेषिकमतेऽनन्तावयवतन्नाशकल्पने गौरवात्। इत्थञ्च सोऽयं घट इत्यादिप्रत्यभिज्ञाऽपि सङ्गच्छते। यत्र तु न प्रत्यभिज्ञा तत्रावयविनाशोऽपि स्वीक्रियत इति। सङ्ख्यां निरूपयितुमाह। गणनेति। गणनव्यवहारासाधारणकारणं संख्येत्यर्थः॥ १०६॥

नित्येष्विति। नित्येषु परमाण्वादिषु एकत्वं नित्यम्। अनित्ये घटादौ एकत्वमनित्यमित्यर्थः। द्वित्वादयो व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्याः॥ १०७॥

अनेकेति। यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्त्तते तथाप्येको द्वाविति प्रत्ययाभावात् एको न द्वाविति प्रत्ययसम्भवाच्च द्वित्वादीनां पर्य्याप्तिलक्षणः कश्चन सम्बन्धोऽनेकाश्रयोऽभ्युपगम्यते। अपेक्षाबुद्धिनाशादिति। प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिः। ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पकरूपम्। ततो द्वित्वविशिष्टप्रत्यक्षम्। अपेक्षाबुद्धिनाशस्ततो द्वित्वनाश इति। यद्यपि ज्ञानानां न त्रिक्षणमात्रस्थायियोग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वात् तथाप्यपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं कल्प्यते।

**अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरुच्यते ।**
**परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥१०९॥**

अन्यथा निर्विकल्पकाले अपेक्षाबुद्धिनाशात् अनन्तरं द्वित्वस्यैव नाशः स्यात् न तु द्वित्वप्रत्यक्षं तदानीं विषयाभावात् । विद्यमानस्यैव चक्षुरादिना ज्ञानजननोपगमात् । तस्मात् द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते । न चापेक्षाबुद्धिनाशात् कथं द्वित्वनाश इति वाच्यं कालान्तरे द्वित्वप्रत्यक्षाभावात् । अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशस्तन्नाशक इति कल्पनात् । अत एव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं तेनैव गृह्यत इति कल्प्यते । न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षकारणत्वमस्त्विति वाच्यम् । लाघवेन द्वित्वं प्रति कारणत्वस्यैवोचितत्वात् । अतीन्द्रिये द्व्यणुकादावपेक्षाबुद्धिर्योगिनाम् । सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिर्ब्रह्माण्डान्तरवर्त्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकारणमिति ॥ १०८ ॥

अपेक्षाबुद्धिः केत्यत आह । अनेकेति । अयमेक इत्याकारिका इत्यर्थः । इदन्तु बोध्यं यत्रानियतैकत्वज्ञानं तत्र द्वित्वादिभिन्ना बहुत्वसंख्योत्पद्यते । यथा सेनावनादाविति कन्दलीकारः । आचार्य्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते । तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिः । सेनादौ चोत्पन्ने त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात् इत्यत इतो बहुत्वेयं सेनेति प्रतीतिरुपपद्यते । बहुत्वस्य संख्यान्तरत्वे तत्तारतम्याभावादित्यवधेयम् । परिमाणं निरू-

अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥११०
संख्यातः परिमाणाच्च प्रचयादपि जायते।
अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् १११
परिमाणं घटादौ तु परिमाणजमुच्यते।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते॥११२

पयति। परिमाणमिति। परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः॥ १०९॥

तच्चतुर्विधम् अणु महद् दीर्घं ह्रस्वञ्च। तत् परिमाणम्। नित्यमित्यत्र परिमाणमित्यनुषज्यते॥ ११०॥

जायत इत्यत्रापि परिमाणमित्यनुवर्त्तते। अनित्यमिति पूर्वेणान्वितम्। तथा चानित्यं परिमाणं सङ्ख्याजन्यं परिमाणजन्यं प्रचयजन्यं चेत्यर्थः। तत्र सङ्ख्याजन्यमुदाहरति। द्व्यणुकादाविति। द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकादिपरिमाणं वा न कारणं परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात्। द्व्यणुकादिपरिमाणन्तु परमाणुत्वापेक्षया नोत्कृष्टम्। त्रसरेणुपरिमाणन्तु न सजातीयम्। अतः परमाणौ द्वित्वसङ्ख्या द्व्यणुकपरिमाणस्य, द्व्यणुके त्रित्वसङ्ख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः॥ १११॥

परिमाणजन्यमुदाहरति। परिमाणं घटादाविति।

परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः।
संख्यावत्तु पृथक्त्वं स्यात् पृथक्प्रत्ययकारणम् ॥११२

परिमाणजं कपालादिपरिमाणजन्यम्। प्रचयजन्यमुदाहर्त्तुं प्रचयं निर्वक्ति। प्रचय इति ॥ ११२ ॥

नाश इति। अर्थात् परिमाणस्य। न चावयवनाशः कथं परिमाणनाशकः सत्यप्यवयविनि त्रिचतुरपरमाणुविश्लेषे तदुपचये चावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम् "परमाणुविश्लेषे द्व्यणुकस्य नाशोऽवश्यमभ्युपेयस्तन्नाशे च त्रसरेणुकनाशः" एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात् सति च नाशकेऽनभ्युपगममात्रेण नाशस्यापवदितुमशक्यत्वात्। शरीरादाववयवोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः। न च पटाविनाशेऽपि तन्त्वन्तरसंयोगात् परिमाणाधिक्यं स्यादिति वाच्यं तत्रापि वेमाद्यभिघातेन असमवायिकारणतन्तुसंयोगनाशात् पटनाशस्यावश्यकत्वात्। किञ्च तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात्। तत्तन्तुरूपकारणाभावात्। तत्तन्तोरवयवत्वाभावे च न तेन परिमाणाधिक्यं संयुक्तद्रव्यान्तरवत्। तस्मात् तत्र तन्त्वन्तरसंयोगे सति पूर्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्य्यम्। अवयविनः प्रत्यभिज्ञानन्तु साजात्येन दीपकलिकादिवत्। न च पूर्वतन्तव एव तन्त्वन्तरसहकारात् पूर्वपटे सत्येव पटान्तरमारभतामिति वाच्यं मूर्त्तयोः समानदेशताविरोधात्। एकदा नानाद्रव्यस्य

अन्योन्याभावतो नास्य चरितार्थत्वमुच्यते।
अस्मात् पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११४
अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः।
कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥११५॥

तत्रानुपलम्भबाधितत्वाच्च पूर्वद्रव्यस्य प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यवश्यमभ्युपेयत्वात्।

पृथक्त्वं सकारणं निरूपयति। सङ्ख्यावदिति। पृथक्-प्रत्ययासाधारणं कारणं पृथक्त्वम्। तन्नित्यतादिकं सङ्ख्या-वत्। यथा हि नित्येषु एकत्वं नित्यम् अनित्येऽनित्यम् अनित्यमेकत्वम् आश्रयद्वितीयक्षणेनोत्पद्यते, आश्रयनाशा-न्नश्यति, तथैकपृथक्त्वमपि। द्वित्वादिवद् द्विपृथक्त्वादिक-मपीत्यर्थः। नन्वयमस्मात् पृथग् इत्यादावन्योन्याभावो भासते तत् कथं पृथक्त्वं गुणान्तरं स्वीक्रियते। न चास्तु पृथक्त्वं न त्वन्योन्याभाव इति वाच्यम्। रूपं न घट इति प्रतीत्यनापत्तेः॥ ११३ ॥

न हि रूपे घटावधिकं पृथक्त्वं गुणान्तरमस्ति न वा घटे घटावधिकपृथक्त्वमस्ति येन परम्परासम्बन्धः कल्प्य इत्यत आह। अन्योन्याभावत इति। विलक्षणेति। ननु शब्द-वैलक्षण्यमेव न त्वर्थवैलक्षण्यमिति चेत्। न। विनार्थभेदं घटात् पृथग् इतिवद् घटो नेत्यत्रापि पञ्चमी स्यात्। तस्माद् यदर्थकयोगे पञ्चमी सोऽर्थो नञर्थान्योन्याभावतो भिन्नो गुणान्तरं कल्प्यत इति॥ ११४ ॥

तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः ।
आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः ॥११६
मेषयोः सन्निपातो यः स द्वितीय उदाहृतः ।
कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः ॥११७॥
तृतीयः स्यात् कर्मजोऽपि द्विधैव परिकीर्त्तितः ।
अभिघातो नोदनञ्च शब्दहेतुरिहादिमः ॥११८॥
शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् ।
एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥११९॥
विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत् ।

संयोगं निरूपयति । अप्राप्तयोरिति । त विभजते । कीर्त्तित इति । एष संयोगः ॥ ११५ ॥

सन्निपातः संयोगो द्वितीय उभयकर्म्मजः । तृतीय इति संयोगज इत्यर्थः । तृतीयः स्यादिति पूर्वेणान्वितम् ॥ ११६ ॥ ११७ ॥

आदिमः अभिघातः । द्वितीयो नोदनाख्यः संयोग इति । विभक्तप्रत्ययकारणं विभागं निरूपयति । विभाग इति । एककर्मेति । उदाहरणन्तु श्येनशैलविभागादिकं पूर्ववत् बोध्यम् ॥ ११८ ॥ ११९ ॥

तृतीयो विभागजः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति । आद्यस्तावत् । यत्र कपाले कर्म ततः कपालद्वयविभागः । ततो घटारम्भकसंयोगनाशः ।

हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२०॥
परत्वञ्चापरत्वञ्च द्विविधं परिकीर्त्तितम्।
दैशिकं कालिकञ्चापि मूर्त्त एव तु दैशिकम् १२१

ततो घटनाशः। ततस्तेन कपालविभागेन सकर्म्मणा कपालस्य देशान्तरविभागो जन्यते। ततो देशान्तरसंयोगनाशः। तत उत्तरदेशसंयोगः। ततः कर्म्मनाश इति। न च तेन कर्म्मणैव कथं देशान्तरविभागो न जन्यत इति वाच्यम् एकस्य कर्म्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य च विरोधात्। अन्यथा विकसत्कमलकुड्मलभङ्गप्रसङ्गात्। तस्मात् यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं जनयेत् तदारम्भकसंयोगप्रतिद्वन्द्विविभागं न जनयेत्। न च कारणविभागेनैव द्रव्यनाशात् पूर्वं कुतो देशान्तरविभागो न जन्यत इति वाच्यम् आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्य सति द्रव्ये देशान्तरविभागासम्भवात्। यत्र हस्तक्रियया हस्ततरुविभागः ततः शरीरेऽपि विभक्तप्रत्ययो भवति तत्र च शरीरतरुविभागे हस्तक्रिया न कारणं व्यधिकरणत्वात् शरीरे तु क्रिया नास्ति, अवयविकर्म्मणो यावदवयवकर्म्मनियतत्वात्। अतस्तत्र कारणाकारणविभागेन कार्य्याकार्य्यविभागो जन्यत इति। अत एव विभागो गुणान्तरम्। अन्यथा शरीरे विभक्तप्रत्ययो न स्यात्। अतः संयोगनाशेन विभागो नान्यथासिद्धो भवति ॥ १२०॥

परत्वं सूर्य्यसंयोगभूयस्त्वज्ञानतो भवेत् ।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२२॥
तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।
दिवाकरपरिस्पन्दपूर्वोत्पन्नत्वबुद्धितः ॥ १२३ ॥
परत्वमपरत्वन्तु तदनन्तरबुद्धितः ।
अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः॥१२४
अपेक्षाबुद्धिनाशेन नाशस्तेषामुदाहृतः ।
बुद्धेः प्रकारः प्रागेव प्रायशोऽपि निरूपितः ॥१२५॥

परापरव्यवहारनिमित्ते परत्वापरत्वे निरूपयति । परत्वञ्चेति ॥ १२१ ॥

दैशिकपरत्वं बहुतरसूर्य्यसंयोगान्तरितत्वज्ञानादुत्पद्यते । एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्पद्यते । अत्रावधित्वार्थंद्वितीयापेक्षा । यथा पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः । पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति ॥ १२२ ॥

तयोर्दैशिकपरत्वापरत्वयोः । असमवायी असमवायिकारणम् । तदाश्रये दैशिकपरत्वापरत्वाश्रये । दिवाकरेति ।

अत्र परत्वम् अपरत्वञ्च कालिकं ग्राह्यम् । यस्य सूर्य्यपरिस्पन्दापेक्षया यस्य सूर्य्यपरिस्पन्दोऽधिकः स ज्येष्ठः । यस्य न्यूनः स कनिष्ठः । कालिकपरत्वापरत्वे जन्यद्रव्य एव । अत्र कालिकपरत्वापरत्वयोः ॥ १२३ ॥ १२४ ॥

एवं कालिकदैशिकपरत्वानाम् । क्रमप्राप्तां बुद्धिं निरूपयितुमाह । बुद्धेरिति ॥ १२५ ॥

अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमुच्यते ॥१२६॥
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता।
तत्प्रपञ्चो विपर्य्यासः संशयोऽपि प्रकीर्त्तितः ॥१२७
आद्यो देहे यात्मबुद्धिः शङ्खादौ पीततामतिः।
भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥१२८॥
किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥१२९॥
स संशयो मतिर्या स्यादेकत्राभावभावयोः।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥१३०॥

अप्रमां विभजते। तच्छून्य इति। तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः। तत्प्रपञ्चः अप्रमाप्रपञ्चः ॥ ॥ १२६ ॥ १२७ ॥

आद्य इति। विपर्य्यास इत्यर्थः। शरीरादौ यदात्मत्वप्रकारकं ज्ञानं गौरोऽहमित्याकारकम्। एवं शङ्खादौ पीतः शङ्ख इत्याकारकं यज्ज्ञानं निश्चयरूपं तद्भ्रम इति॥१२८॥

किंस्विदिति। किंस्विदिति वितर्के। निश्चयस्य लक्षणमाह। तदभावेति। तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानं निश्चयः॥ १२९॥

संशयं लक्षयति। स संशय इति। एकधर्म्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः। साधारणेति।

दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत्।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥१३१

उभयसाधारणो यो धर्म्मस्तज्ज्ञानं संशयकारणम्। यथा उच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वा अयं स्थाणुर्न वेति सन्दिग्धे। एवम् असाधारणज्ञानं कारणम्। यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे। विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणम्। शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वाभाव्यात्। किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते। संशयस्तु मानस एवेति। एवं ज्ञाने प्रामाण्यसंशयात् विषयसंशय इति। एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम्। किन्तु संशये धर्म्मिज्ञानं धर्म्मीन्द्रियसन्निकर्षो वा कारणमिति॥ १३०॥

दोष इति। अप्रमां प्रति दोषः जनककारणम्। प्रमां प्रति गुणः कारणम्। तत्रापि पित्तादिरूपा दोषा अननुगताः। तेषां कारणत्वम् अन्वयव्यतिरेकाभ्यामेव सिद्धम्। गुणस्य प्रमाजनकत्वन्तु अनुमानात् सिद्धम्। यथा प्रमाज्ञानसाधारणकारणभिन्नकारणजन्या जन्यज्ञानत्वात् अप्रमावत्। न च दोषाभाव एव कारणमस्त्विति वाच्यम्। पीतः शङ्ख इति ज्ञानस्थले पित्तदोषसत्त्वाच्छङ्खत्वप्रमानुत्पत्तिप्रसङ्गात्। विनिगमनाविरहात् अनन्तदोषाभावस्य कारणत्वमपेक्ष्य गुणकारणताया न्याय्यत्वात्। न च गुणसत्त्वेऽपि पित्तप्रतिबन्धाच्छङ्खे न श्वैत्यज्ञानम् अतः पित्तादिदोषाभावानां

प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥१३२
पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥१३३॥
शाब्दबोधे योग्यतायास्तात्पर्य्यस्याथ वा प्रमा ।
गुणः स्याद् भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा १३४
अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।

कारणत्वमवश्यं वाच्यं तथा च किं गुणस्य हेतुत्वकल्पनयेति वाच्यं तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः । एवं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वाच्च । तत्र दोषाः के इत्याकाङ्क्षायामाह । पित्तेति । क्वचित् पित्तादिभ्रमे पित्तं दोषः । क्वचिच्चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः । क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवं दोषा भ्रान्तिजनका इत्यर्थः ॥ १३१ ॥

अथ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमशो गुणान् दर्शयति । प्रत्यक्षे त्विति । प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः । अनुमितौ साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुण इति । एवमग्रेऽप्यूह्यः ।

प्रमां निरूपयति । भ्रमभिन्नमिति ॥ १३२ ॥ १३३ ॥ ॥ १३४ ॥

ननु यत्र शुक्तिरजतयोरिमे रजते इति ज्ञानं जातं तत्र रजतांशेऽपि प्रमा न स्यात् तज्ज्ञानस्य भ्रमभिन्नत्वा-

तत् प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्॥१३५॥
प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत्।

भावात् अत आह। अथवेति तद्वद्विशेष्यकं तत्प्रकारकं ज्ञानं प्रमा इत्यर्थः। इदन्तु बोध्यम्। येन सम्बन्धेन तद्वत्ता तेन सम्बन्धेन तद्वद्विशेष्यकं तेन सम्बन्धेन तत्प्रकारकत्वं वाच्यम्। तेन कपालादौ संयोगादिना घटादिज्ञाने नातिव्याप्तिः। एवं सति निर्विकल्पकं प्रमा न स्यात् तस्य सप्रकारकत्वाभावात् अत आह। न प्रमेति। ननु वृक्षे कपिसंयोगज्ञानं भ्रमः स्यात् प्रमा च स्यादिति चेत्। न। प्रतियोगिव्यधिकरणसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात्। न च वृक्षे संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानं भ्रमो न स्यात् तत्र संयोगाभावस्य प्रतियोगिव्यधिकरणत्वाभावादिति वाच्यं तत्र संयोगाभावावच्छेदकावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्। लक्ष्यस्याननुगमात् लक्षणाननुगमेऽपि न क्षतिः॥ १३५॥

प्रमात्वमिति। मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति वदन्ति। तत्र गुरूणां मते ज्ञानस्य स्वप्रकाशरूपत्वात् तज्ज्ञानप्रामाण्यं तेनैव गृह्यते इति। भट्टानां मते ज्ञानमतीन्द्रियम्। ज्ञानजन्या ज्ञातता प्रत्यक्षा। तया च ज्ञानमनुमीयते। मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते। सर्वेषामपि मते तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं गृह्यते। विषयनिरूप्यं हि ज्ञानम्। अतो ज्ञानवित्तिवेद्यो विषयः। तन्मतं दूषयति। न स्वतो

प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥१३६॥

ग्राह्यमिति । संशयेति । यदि ज्ञानप्रामाण्यं स्वतो ग्राह्यं स्यात् तदाऽभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात् । तत्र हि यदि ज्ञानं ज्ञातं तदा प्रामाण्यं ज्ञातमेवेति कथं संशयः। यदि तु ज्ञानं न ज्ञातं तदा धर्म्मिज्ञानाभावात् कथं संशयः । तस्माज्ज्ञानप्रामाण्यमनुमेयम् । तथाहि इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वात् यन्नैवं यथाऽप्रमा । इदं पृथिवीत्वप्रकारकं ज्ञानं प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् । एवम् इदं जलज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञानत्वात् । न च हेतुज्ञानं कथं जातमिति वाच्यम् । पृथिवीत्वप्रकारकत्वस्य स्वतो ग्राह्यत्वात् तत्र गन्धवद्विशेष्यकत्वस्यापि सुग्रहत्वात् । तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वं परं न गृह्यते संशयानुरोधात् । न च प्रमात्वस्य साध्यस्य प्रसिद्धिः कथमिति वाच्यम् इदं ज्ञानप्रमात्वस्य स्वतो ग्राह्यत्वात् । न च प्रकारभेदेन प्रामाण्यभेदात् घटत्ववति घटत्वप्रकारादेः कथं प्रसिद्धिरिति वाच्यं घटत्वप्रकारकत्वस्य स्वविशेष्यकत्वस्य च स्वतो ग्राह्यत्वात् । घटस्य च पूर्वमुपस्थितत्वात् घटविशेष्यकं घटत्वप्रकारकमिति ज्ञाने प्रामाण्यस्य बाधकाभावः । व्यवसायपरन्तु प्रामाण्यं न गृह्यते । तत्र संशयसामग्रीसत्त्वे संशयस्यैवोपपत्तेः। किञ्चाभ्यासदशायां तृतीयानुव्यवसायादिना प्रामाण्यस्य स्वत एव ग्रहसम्भवात् प्रथमानुव्यवसायपरं न तद्ग्राहकत्वमिति कल्प्यते संशयानुरोधात् । अथ प्रामाण्यानु-

मितौ प्रामाण्यग्रहे न तस्य विषयनिश्चयरूपत्वार्थं तत्र प्रामाण्यग्रहो वाच्यः सोऽप्यनुमित्यन्तरेणेति फलमुखी कारणमुखी वा नानवस्थेति चेन्न अगृहीताप्रामाण्यग्रहकस्यैव निश्चयरूपत्वात्। यत्र च प्रामाण्यसंशयस्तत्रैव परं प्रामाण्यानुमितेरपेक्षया यावदाशङ्कं प्रामाण्यानुमितिरिष्यत एव सर्वत्र तु न संशयः क्वचित् कोट्यनुपस्थितेः क्वचिद्विशेषदर्शनादितः क्वचिद्विषयान्तरसञ्चारादिति सङ्क्षेपः। ननु सर्वेषां ज्ञानानां यथार्थत्वात् प्रमालक्षणे तद्विशेष्यकत्वं विशेषणं व्यर्थम्। न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात् तव मते भ्रमस्याभावादिति वाच्यम्। तत्र हि दोषाधीनस्य पुरोवर्त्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात्। सत्यरजतस्थले तु विशिष्टज्ञानस्य सत्त्वात् तदेव कारणम्। अस्तु वा तत्रापि भेदाग्रह एव कारणमिति। न वाऽन्यथाख्यातिः सम्भवति। रजतप्रत्यक्षकारणस्य रजतसन्निकर्षस्याभावात् रङ्गे रजतबुद्धेरनुपपत्तेरिति चेन्न सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः कॢप्तत्वात् अन्यत्रापि तत्कल्पनात्। न च संवादिप्रवृत्तौ तत् कारणं विसंवादिप्रवृत्तौ तु भेदाग्रहः कारणमिति वाच्यं लाघवात् प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात्। इत्थञ्च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः। फलमुखगौरवस्यादोषत्वात्। किञ्च यद् रङ्गरजतयोरिमे रजते इति ज्ञानं जातं तत्र न कारणबाधोऽपि। अपिच यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम्। रङ्गे रङ्ग-

व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे तर्कः क्वचित् शङ्कानिवर्त्तकः १३७

भेदग्रहे रजते रजतभेदग्रहेऽन्यथाख्यातिभयात् । त्वन्मते रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्य च सत्त्वात् । दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात् । किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहाद् अनुमितिर्निर्बाधा । यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम् । इत्थम् अन्यथा ख्यातौ प्रत्यक्षमेव प्रमाणम् । रङ्गं रजततया जानामीत्यनुभवादिति सङ्क्षेपः ॥ १३६ ॥

पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तं दर्शयति । व्यभिचारस्येति । व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणमित्यर्थः । व्यभिचारग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वात् तदभावः कारणम् । अन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता । भूयोदर्शनन्तु न कारणम् । व्यभिचारास्फूर्त्तौ सकृद्दर्शनेऽपि क्वचिद् व्याप्तिग्रहात् । क्वचिद् व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते । यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षबाधकतर्कोऽपेक्षितः । तथापि वह्निविरहिण्यपि धूमः स्यादिति यदा शङ्का भवति तदा सा वह्निधूमयोः कार्य्यकारणभावस्य प्रतिसन्धानान्निवर्त्तते । यद्ययं वह्निमान् न स्यात् तदा धूमवान् न स्यात् । कारणं विना कार्य्यानुपपत्तेः । यदि

साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥१३८॥

क्वचित् कारणं विनापि भविष्यति अहेतुक एव वा भविष्यतीति तत्राशङ्का भवति तदा सा व्याघातादपसरणीया । यदि कारणं विना कार्य्यं स्यात् तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य नियमत उपादानं तत्रैव न स्यादिति । यत्र स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तं तर्कः क्वचित् शङ्कानिवर्त्तक इति ॥ १३७ ॥

इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयति । साध्यस्येति । साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापक इत्यर्थः । ननु स श्यामो मित्रातनयत्वाद् इत्यत्र शाकपाकजत्वं नोपाधिः स्यात्, तस्य साध्यव्यापकत्वाभावात् । श्यामत्वस्य घटादावपि सत्त्वात् । एवं वायुः प्रत्यक्षः स्पर्शाश्रयत्वाद् इत्यत्र उद्भूतरूपवत्त्वं नोपाधिः स्यात् । प्रत्यक्षत्वस्यात्मादिषु सत्त्वात् तत्र रूपाभावात् । एवं ध्वंसो विनाशी जन्यत्वाद् इत्यत्र भावत्वं नोपाधिः स्याद् विनाशित्वस्य प्रागभावे सत्त्वात् । तत्र च भावत्वाभावादिति चेन्न । यद्धर्म्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्म्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थतात्पर्य्यात् । मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वम् । एवं बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वं बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकञ्च । एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकं भावत्वम् ।

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥१३९॥
व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम्।
शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ॥१४०॥

सद्धेतौ तु एतादृशो धर्म्मो नास्ति यदवच्छिन्नस्य साध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य व्यापकं किञ्चित् स्यात्। व्यभिचारिणि तु अन्तत उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचारनिरूपकमधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेः सम्भवतीति ॥ १३८ ॥

अत एव लक्ष्यमपि रूपमेतदनुसारेण दर्शयति। सर्वे इति। स्वसाध्येति। स्वम् उपाधिः स्वञ्च साध्यञ्च स्वसाध्ये तयोर्व्यभिचारिता इत्यर्थः। ॥ १३९ ॥

उपाधेर्दूषकतावीजमाह। व्यभिचारस्येति। उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् उपाधेः प्रयोजनमित्यर्थः। तथाहि यत्र शुद्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्। यथा धूमवान् वह्नेरित्यादौ वह्निर्धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वाद् इति व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात्। यत्र तु किञ्चिद्धर्म्मावच्छिन्नसाध्यव्यापक उपाधिस्तत्र तद्धर्म्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्। यथा स श्यामो मित्रातनयत्वादित्यत्र

अनुमानगतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः ॥१४१॥

मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति । बाधानुन्नीतपक्षेतरत्वन्तु साध्यव्यापकताग्राहकप्रमाणाभावात् स्वव्याघातकत्वाच्च नोपाधिः । बाधोन्नीतन्तु पक्षेतरत्वम् उपाधिर्भवत्येव यत्र वह्निरनुष्णः कृतकत्वाद् इत्यादौ प्रत्यक्षेण वह्नेरुष्णत्वग्रहे वह्नीतरत्वमुपाधिः । यत्र साध्यव्यापकत्वादिकं सन्दिह्यते स सन्दिग्धोपाधिः । पक्षेतरस्तु सन्दिग्धोपाधिरपि नोद्भावनीयः कथकसम्प्रदायानुरोधादिति । केचित्तु सत्प्रतिपक्षोत्थापनमुपाधिफलम् । तथाहि अयोगोलकं धूमवद्वह्नेरित्यादौ अयोगोलकं धूमाभाववद् आर्द्रेन्धनाभावाद् इति सत्प्रतिपक्षसम्भवात् । इत्यञ्च साधनव्यापकोऽपि क्वचिदुपाधिः । यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यादौ अनुष्णाशीतस्पर्शवत्त्वम् । न चात्र स्वरूपसदुपाधिरेव दूषणमिति वाच्यम् । सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात् । अत्र च साध्यव्यापकपक्षावृत्तिरुपाधिरिति वदन्ति । शब्दोपमानयोरिति ॥ १४० ॥

वैशेषिकाणां मते प्रत्यक्षमनुमानञ्च प्रमाणं शब्दोपमानयोरनुमानविधयैव प्रामाण्यम् । तथाहि दण्डेन गामभ्याजेत्यादिपदानि वैदिकपदानि वा तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वाद् घटमानयेतिपदकदम्बवत् । यद्वा एते पदार्था मिथः संसर्ग-

**द्वैविध्यन्तु भवेद् व्याप्तेरन्वयव्यतिरेकतः।**
**अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ॥ १४२ ॥**

वन्तः योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवत्। दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरिति। एवं गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्। यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वाद् इत्यनुमानेन पक्षधर्म्मताबलाद् गवयत्वप्रवृत्तिनिमित्तकत्वं भासते तन्मतं दूषयति। तन्न सम्यगिति। विना व्याप्तिज्ञानं शब्दादितो बोधस्यानुभविकत्वात्। न हि सर्वत्र शब्दश्रवणाद्यनन्तरं व्याप्तिज्ञाने मानमस्तीति। किञ्च सर्वत्र शब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्दबोध एव किं न स्वीक्रियत इति ॥ १४१ ॥

द्वैविध्यमिति। अनुमानं हि त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्। तत्रासद्विपक्षः केवलान्वयी। यथा ज्ञेयम् अभिधेयादित्यादौ। तत्र हि सर्वस्यैव ज्ञेयत्वाद् विपक्षासत्त्वम्। ननु सर्वेषां धर्म्माणां व्यावृत्तत्वात् केवलान्वय्यसिद्धिरिति चेन्न। व्यावृत्तत्वस्य सर्वसाधारण्ये तस्यैव केवलान्वयित्वात्। किञ्च वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्। तच्च गगनाभावादौ प्रसिद्धम्। असत्सपक्षः केवलव्यतिरेकी। यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ। तत्र हि

साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत्।
अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते॥ १४३॥

जलादिचयोदशभेदस्य पूर्वमनिश्चिततया निश्चितसाध्यवतः सपक्षस्याभाव इति। सत्सपक्षविपक्षोऽन्वयव्यतिरेकी। यथा वह्निमान् धूमादित्यादौ। तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति॥ १४२॥

तत्र व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदेव व्यतिरेकव्याप्तिं निर्वक्ति। साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेद् इति। साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः। अत्रेदं बोध्यम्। येन सम्बन्धेन यत्र येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभाववत्ताज्ञानाद् यत्सम्बन्धेन यद्धर्मावच्छिन्नस्य व्याप्यता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिः। इत्थञ्च यत्र विशेषणतादिसम्बन्धेनेतरत्वव्यापकत्वं गन्धाभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिध्यति। यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकता गृह्यते तत्र तादात्म्यसम्बन्धेनेतरस्याभावः सिध्यति। स एवान्योन्याभावः। एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्यते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः सिध्यति। अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम्। केचित् तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न तु

**व्यतिरेकव्याप्तिबुद्ध्या चरितार्थो हि सा यतः।**
**सुखन्तु जगतामेव काम्यं धर्मेण जन्यते ॥ १४४ ॥**

व्यतिरेकव्याप्तिज्ञानं कारणम्। यत्र व्यतिरेकसहचाराद् व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते। साध्यप्रसिद्धिस्तु घटादावेव ज्ञायतां पश्चात् पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति।

अर्थापत्तेस्त्विति। अर्थापत्तिं प्रमाणान्तरं मन्यन्ते केचन। तथाहि यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वञ्च प्रत्यक्षादवगतं तत्र शतवर्षजीवित्वान्यथानुपपत्त्या बहिःसत्त्वं कल्प्यते तदनुमानेन गतार्थत्वान्नेष्यते। तथाहि जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतम्। तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते। एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनं सिध्यति। दिवाभोजनबाधे रात्रिभोजनं सिध्यति। अभावप्रत्यक्षस्यानुभविकत्वादनुपलम्भोऽपि न प्रमाणान्तरम्। किञ्चानुपलम्भस्याज्ञानस्य हेतुत्वे ज्ञानाकरणकत्वात् प्रत्यक्षत्वम्। ज्ञानस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था। चेष्टापि प्रमाणान्तरं न। तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात्। तत्र तु व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति ॥ १४३ ॥

सुखं निरूपयति। सुखन्तु जगतामेव काम्यं धर्मेण

अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम्।
निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते १४५
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि।
चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् १४६
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत्।
बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका ॥१४७॥

जन्यत इति। काम्यमभिलाषविषयः। धर्मेति धर्मत्वेन सुखत्वेन कार्य्यकारणभाव इत्यर्थः॥ १४४॥

दुःखं निरूपयति। अधर्मेति। अधर्मत्वेन दुःखत्वेन कार्य्यकारणभाव इत्यर्थः। प्रतिकूलमिति दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकविषय इत्यर्थः। इच्छां निरूपयति। निर्दुःखत्व इति॥ १४५॥

इच्छा हि फलविषयिणी उपायविषयिणी च। फलन्तु सुखं दुःखाभावश्च। तत्र फलेच्छां प्रति फलज्ञानं कारणम्। अत एव स्वतः पुरुषार्थः सम्भवति। तज्ज्ञानं सत् स्ववृत्तितयेष्यते स स्वतः पुरुषार्थ इति तल्लक्षणात्। इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः। उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम्। चिकीर्षेति। [कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभावात्॥ १४६॥

चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानञ्च कारणम्। अत एव वृष्ट्यां कृतिसाध्यताभावान्न चिकीर्षा।

तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते।
द्विष्टसाधनताबुद्धिर्भवेद् द्वेषस्य कारणम्॥ १४८॥
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम्।
एवं प्रयत्नवैविध्यं तान्त्रिकैः परिदर्शितम्॥१४९॥
चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा।

बलवदिति। बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकम्। अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा। बलवद्द्वेषः प्रतिबन्धक इत्यन्ये॥ १४७॥

कस्यचिन्मत इति। बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः। कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावात् कस्यचिन्मत इत्यस्वरसो दर्शितः। द्वेषं निरूपयति। द्विष्टसाधनेति। दुःखोपायविषयकं द्वेषं प्रति द्विष्टसाधनताज्ञानं कारणमित्यर्थः। बलवदिष्टसाधनताज्ञानञ्च प्रतिबन्धकम्। तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः॥ १४८॥

यत्नं निरूपयति। प्रवृत्तिश्चेति। प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदात् प्रयत्नस्त्रिविध इत्यर्थः॥ १४९॥

चिकीर्षेत्यादि। मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः। कृतिसाध्यताज्ञानादिवद् बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकात् प्रवृत्तौ कारणमित्यपि वदन्ति।

उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ॥१५०॥

कार्य्यताज्ञानं प्रवर्त्तकमिति गुरवः। तथाहि ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति। सा च कृतिसाध्यताज्ञानसाध्या। इच्छायाः स्वप्रकारप्रकारक-धीसाध्यत्वनियमात् चिकीर्षा हि कृतिसाध्यत्वप्रकारि-केच्छा। तत्र कृतिसाध्यत्वं प्रकारस्तत्प्रकारकज्ञानं चिकी-र्षायां तद्द्वारा प्रवृत्तौ च हेतुः। न त्विष्टसाधनताज्ञानं तत्र हेतुः। कृत्यसाध्येऽपि प्रवृत्त्यापत्तेः। कृत्यसाध्यता-ज्ञानं प्रतिबन्धकमिति चेन्न। तदभावापेक्षया कृतिसाध्य-ताज्ञानस्य लघुत्वात्। न च द्वयोरपि हेतुत्वं गौरवात्। ननु तन्मतेऽपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने च प्रवृ-त्त्यापत्तिः कार्य्यताज्ञानसत्त्वादिति चेन्न। स्वविशेषणवत्ता-प्रतिसन्धानजन्यकार्य्यताज्ञानस्य प्रवर्त्तकत्वात्। काम्ये हि यागपाकादौ कामना स्वविशेषणम्। ततश्च बलवदनिष्टा-ननुबन्धिकाम्यसाधनताज्ञानेन कार्य्यताज्ञानम्। ततः प्रवृत्तिः। तृप्तश्च भोजने न प्रवर्त्तते। तदानीं कामनायाः पुरुषविशेषणत्वाभावात्। नित्ये च शौचादिकं पुरुषविशे-षणम्। तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात् तत्र प्रवृत्तेः। ननु तदपेक्षया लाघवेन बलवदनिष्टाननुबन्धीष्ट-साधनताविषयककार्य्यताज्ञानमेव हेतुरस्तु बलवदनिष्टा-ननुबन्धित्वञ्च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजन-कत्वं बलवद्द्विष्टविषयदुःखाजनकत्वं वेति चेन्न। इष्टसाध-त्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्। साध्यत्वसाध-

नत्वयोर्विरोधात् असिद्धस्य तु साध्यत्वं सिद्धस्य च साधनत्वम्। न च एकमेकेनैकदा सिध्यमसिद्धञ्च ज्ञायते। तस्मात् कालभेदादुभयं ज्ञायते। मैवम्। लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य हेतुत्वात्। न च साध्यत्वसाधनत्वयोर्विरोधः। यदा कदाचित् साध्यत्वसाधनत्वयोरविरोधात्। एकदा साध्यत्वसाधनत्वयोश्चाज्ञानात्। नवीनास्तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकमनागतेष्टस्य ज्ञातुमशक्यत्वात्। किन्तु यादृशस्य पुंसः कृतिसाध्यं यदिष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्त्तते तेनौदनकामस्य तत्साधनताज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवर्त्तत इत्याहुस्तन्न। स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्भेदादिना सम्भोगादौ च तदभावात्। इदन्तु बोध्यम्। तदानीमिष्टसाधनत्वादिज्ञानं प्रवर्त्तकम्। तेन भावियौवराज्ये बालस्य न प्रवृत्तिः तदानीं कृतिसाध्यत्वाज्ञानात्। एवं तृप्तो भोजने न प्रवर्त्तते, तदानीमिष्टसाधनत्वाज्ञानात्। प्रवर्त्तते च रोगदूषितचित्तो विषादिभक्षणे तदानीं बलवदनिष्टाननुबन्धित्वज्ञानात्। न च चास्तिकस्यागम्यागमनशत्रुवधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम्। उत्कटरागादिना नरकसाधनताधीनिरोधनात्। तृप्त्यादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षाप्रवृत्ती। किन्त्विष्टसाधनताज्ञानादिच्छामात्रम्। कृतिश्च प्रवृत्तिरूपा बोध्या। तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसञ्चारे

न प्रवृत्तिः। इत्यञ्च प्रवर्त्तकत्वानुरोधाद्विधेरपि तावानर्थः इत्यञ्च विश्वजिता यजेत इत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते। नन्वहरहः सन्ध्यामुपासीतेत्यादौ इष्टानुत्पत्तेः प्रवृत्तिः कथम्। न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम्। तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः, कामनाभावेऽकरणापत्तेश्च। इत्यञ्च फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न। ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव भरणीश्राद्धे काम्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात्। न च कामनाभावेऽकरणापत्तिः। त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात्। ननु वेदबोधितकार्य्यताज्ञानात् प्रवृत्तिः सम्भवतीति चेन्न। इष्टसाधनत्वमज्ञाय तादृशकार्य्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात्। यदपि पण्डापूर्वंफलमिति तदपि न। कामनाभावेऽकरणापत्तेस्तौल्यात्। कामनाकल्पने त्वार्थवादिफलमेव रात्रिसत्रन्यायात् कल्प्यतामन्यथा प्रवृत्त्यनुपपत्तेः। तेन,

क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते।
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते॥

एवम्।

सन्ध्यामुपासते ये तु सततं शंसितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्॥

एवम्।

दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्।

इत्यादिकमेव फलमस्तु। न च पितृप्रीतिः कथं फलं व्याधि-

करणत्वादिति वाच्यम्। गयाश्राद्धादाविव उद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचित् कल्पनात्। अत एवोक्तं शास्त्रदर्शितफलमनुष्ठातरीत्युत्सर्ग इति। पितॄणां मुक्तत्वे तु स्वस्य स्वर्गफलं यावज्जीवत्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्गफलकल्पनात्। पण्डापूर्वार्थप्रवृत्तिश्च न सम्भवति। न हि तत्सुखदुःखाभाववत् स्वतः पुरुषार्थः, न वा तत्साधनम्। प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेत्। इत्थम्। यथाहि नित्यकृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः। एवं प्रत्यवायाभावस्य सत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणतया दुःखप्रागभावं प्रत्यपि सुवचत्वात्। एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति। ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्वयः। इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न। तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वञ्च न विध्यर्थः किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते। अथवा बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः। तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति। ननु श्येनेनाभिचरन् यजेतेत्यत्र कथं बलवदनिष्टाननुबन्धित्वमर्थः श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्। न च वैधत्वान्निषेध इति वाच्यम्। अभिचारे प्रायश्चित्तोपदेशात्। न च मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खङ्गकारस्य कूपकर्त्तुश्च हिंसकत्वापत्तिर्गललग्नान्नभक्षणजन्यमरणे

स्यात्मवधत्वापत्तिरेवेति वाच्यम् । मरणोद्देश्यकत्वस्यापि विशेषणत्वात् । अत एव सप्तमीतेलाभ्यङ्गस्य न हिंसात्वम् । अन्योद्देश्यकच्छिन्ननाराचहतब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न । श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात् । अत एव काशीमरणाद्यर्थकृतशिवपूजादेरपि न हिंसात्वम् । न च साक्षान्मरणजनकस्यैव हिंसात्वं श्येनस्तु न तथा किन्तु तज्जन्यापूर्वमिति वाच्यम् । खड्गाघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानापत्तेः । केचित्तु श्येनस्य हिंसाफलं न तु मरणम् । श्येनजन्यखड्गघातादिरूपा हिंसा अभिचारपदार्थः । तस्य च पापजनकत्वम् । अतः श्येनस्य वेधत्वात् पापाजनकत्वेऽपि अग्रिमपापं प्रतिसन्धाय सन्तो न प्रवर्त्तन्ते । आचार्य्यास्तु आप्ताभिप्रायो विध्यर्थः । पाकं कुर्य्यादित्यादौ आप्तानिरूप्येच्छावाचित्वाल्लिङ्गाचस्वेच्छावाचित्वं लाघवात् । एवञ्च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतयाऽभीष्ट इत्यर्थः । तत आप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्त्तते । कलञ्जभक्षणादौ तदभावान्न प्रवर्त्तते । यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधेरेव तावद्गर्भ इव श्रुतिः कुमार्य्याः पुंयोगे मानम् । न च कर्त्तृस्मरणं बाधकम् । कपिलकणादादिकमारभ्याद्यपर्य्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वात् । अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः । तत्रैव कर्तृस्मरणमस्तीति चेद्वेदेऽपि छन्दांसि जज्ञिरे तस्मादित्यादिकर्त्तृस्मरणमस्त्येव । एवं प्रति मन्वन्तरं चैषा श्रुतिरन्या विधीयत इत्यपि द्रष्टव्यम् ।

निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनता धियः।
यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् ॥१५१॥
शरीरे प्राणसञ्चारकारणं परिकीर्त्तितम्।
अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत् १५२

स्वयम्भुरेष भगवान् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्य्यन्ताः स्मर्त्तारोऽस्य न कारकाः॥

इति वेदस्य स्तुतिमात्रम्। न च पौरुषेयत्वे भ्रमादिसम्भवादप्रामाण्यं स्यादिति वाच्यम्। नित्यसर्वज्ञत्वेन निर्दोषत्वात्। अत एव पुरुषान्तरभ्रमादिसम्भवान्न कपिलादेः कर्त्तृत्वं वेदस्य। किञ्च वर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात् सुतरां तत्सन्दर्भस्य वेदस्यानित्यत्वमिति। उपादानस्येति। उपादानस्य समवायिकारणस्याध्यक्षं प्रत्यक्षं प्रवृत्तौ कारणमिति॥ १५०॥

द्विष्टसाधनताज्ञानस्य दुःखसाधनविषयकनिवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकादवधारितमिति भावः। यत्न इति। जीवनयोनियत्नो यावज्जीवनमनुवर्त्तते। स चातीन्द्रियः॥ १५१॥

तत्र प्रमाणमाह। शरीरे प्राणसञ्चारकारणं परिकीर्त्तितमिति। प्राणसञ्चारो हि अधिकः श्वासादिः प्रयत्नसाध्यः। इत्थञ्च प्राणसञ्चारस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षयत्नस्य बाधाच्चातीन्द्रिययत्नसिद्धिः। स एव जीवनयोनिप्रयत्नः। गुरुत्वं निरूपयति। अतीन्द्रियमिति॥ १५२॥

अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम्।
तदेवासमवायि स्यात् पतनाख्ये तु कर्मणि॥१५३॥
सांसिद्धिकद्रवत्वं स्यान्नैमित्तिकमथापरम्।
सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः १५४
परमाणौ जले नित्यमन्यत्रानित्यमुच्यते।
नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु॥१५५॥
द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत्।

अनित्ये द्व्यणुकादौ तद्गुरुत्वमनित्यम्। नित्ये परमाणौ नित्यम्। गुरुत्वमित्यनुवर्त्तते। तद्गुरुत्वम् असमवायि असमवायिकारणम्। पतने आद्यपतने इत्यर्थः॥१५३॥

द्रवत्वं निरूपयति। सांसिद्धिकमिति। द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकञ्चेति। द्वितीयं नैमित्तिकं परमाण्वोरिति॥ १५४॥

जलपरमाणौ द्रवत्वं नित्यम्। अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यम्। कुत्रचित्तेजसि कुत्रचित् पृथिव्याञ्च नैमित्तिकं द्रवत्वम्। तत्र को वा नैमित्तिकस्तद्दर्शयति। नैमित्तिकमिति। वह्नीतिपदं तेजोऽर्थकम्। यथा च तेजःसंयोगाग्निसंयोगजन्यं नैमित्तिकं द्रवत्वम्। तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृति पृथिव्यां वर्त्तत इत्यर्थः॥ १५५॥

द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तदिति। हेतुरिति असमवायिकारणमित्यर्थः। सङ्ग्रहे सक्तुकादिसंयो-

स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ १५६
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता।
संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने ॥१५७
मूर्त्तमात्रे तु वेगः स्यात् कर्म्मजो वेगजः क्वचित्।
स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि१५८

गविशेषे तद्द्रवत्वं स्नेहसहितमिति बोद्धव्यम्। तेन द्रुतसुवर्णादीनां न संग्रहः। स्नेहं निरूपयति। जले इति। जल एवेत्यर्थः। असौ स्नेहः। १५६॥

ननु पृथिव्यामपि तैले स्नेह उपलभ्यते। न चासौ जलीयः। तथा सति दहनप्रातिकूल्यं स्यादत आह। तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलतेति। तत्प्रकर्षात् स्नेहप्रकर्षात्। तैले उपलभ्यमानस्नेहोऽपि जलीय एव; तस्य प्रकृष्टत्वादग्नेरानुकूल्यम्। अपकृष्टस्नेहं हि जलं वह्निं नाशयतीति भावः। संस्कारं निरूपयति। संस्कारेति। वेगस्थितिस्थापकभावनाभेदात् संस्कारस्त्रिविध इत्यर्थः॥१५७॥

मूर्त्तमात्रे तु वेगः स्यात् कर्म्मजो वेगजः क्वचिदिति। कर्म्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः। शरादौ हि नोदनजनितेन कर्म्मणा वेगो जन्यते। तेन च पूर्वकर्म्मनाशादुत्तरं कर्म्म। एवमग्रेऽपि। विना च वेगं कर्म्मणः कर्म्मप्रतिबन्धकत्वात् पूर्वकर्म्मनाश उत्तरकर्म्मोत्पत्तिश्च न स्यात्। यत्र वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः। स्थितिस्थापक इति। आकृष्टशाखादीनां कपि-

अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम्
भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ॥१५९
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत्।
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ॥ १६० ॥

त्यागे पुनर्गमनस्य स्थितिस्थापकसाध्यत्वात्। केचिदिति। चतुर्षु क्षित्यादिषु स्थितिस्थापकं केचिन्मन्यन्ते तदप्रमाणमिति भावः ॥ १५८ ॥

असौ स्थितिस्थापकः। क्वचित् आकृष्टशाखादौ। भावनाख्य इति ॥ १५९ ॥

तस्य संस्कारस्य। उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तम्। तत्संशयात् संस्कारानुत्पत्तेर्निश्चय इत्युक्तम्। तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः। ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणम् इत्यत्र संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न। विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात्। किञ्च उपेक्षास्थले संस्कारकल्पनाया गुरुत्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात्। तत्र प्रमाणं दर्शयति। स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते इति। असौ संस्कारः स्मरणं प्रत्यभिज्ञानञ्च जनयति। अतः संस्कारः कल्प्यते। विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यात्। स्वस्वव्यापारान्यतराभावे कारणत्वासम्भवात्। न च प्रत्य-

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम्।
गङ्गास्नानादियागादिव्यापारः परिकीर्त्तितः॥१६१
कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः।

भिज्ञां प्रति तत्तासंस्कारस्य हेतुत्वेन प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्। अप्रयोजकत्वात्। परे तु अनुद्‌बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्‌बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः॥ १६०॥

अदृष्टं निरूपयति। धर्म्माधर्म्माविति। स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म्म इत्यर्थः। तत्र प्रमाणं दर्शयितुमाह, यागादीति। यागादिव्यापारतया हि धर्म्मः कल्प्यते। अन्यथा यागादीनां चिरं विनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात् तदुक्तमाचार्य्यैः।

चिरध्वस्तं फलायालं न कर्म्मातिशयं विना इति॥

ननु यागध्वंस एव व्यापारः स्यात् न च प्रतियोगितद्ध्वंसयोरेकत्राजनकत्वम्। सर्वत्र तथात्वे मानाभावात्। न च त्वन्मते फलानन्त्यं मन्मते चरमफलस्यापूर्वनाशकत्वान्न तथात्वमिति वाच्यम्। कालविशेषस्य सहकारित्वाद् इत्यत आह। गङ्गास्नानेति। गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानां जलसंयोगध्वंसानां व्यापारत्वमपेक्ष्यैकमपूर्वं कल्प्यते लाघवादिति भावः॥ १६१॥

ननु ध्वंसोऽपि न व्यापारोऽस्तु। न निर्व्यापारस्य

अधर्म्मो नरकादीनां हेतुर्निन्दितकर्म्मजः ॥१६२॥
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ।
इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ॥१६३॥

चिरध्वस्तस्य कथं कारणत्वमिति वाच्यम्, अनन्यथासिद्ध-नियतपूर्ववर्त्तित्वस्य तत्रापि सत्त्वात्। अव्यवहितपूर्ववर्त्तित्वं हि चक्षुःसंयोगादेः कारणत्वं न तु सर्वत्र कार्य्यकालवृत्तित्वमिव समवायिकारणस्य कारणत्वमित्यत आह। कर्म्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मत इति। यदि हि अपूर्वं न स्यात् तदा कर्म्मनाशाजलस्पर्शादिना नाश्यत्वं धर्म्मस्य न स्यात्। न हि तेन यागादिनाशः प्रतिबन्धो वा कर्त्तुं शक्यते। तस्य पूर्वमेव वृत्तत्वादिति। एतेन देवताप्रीतिरेव फलमित्यपास्तम्। गङ्गास्नानादौ सर्वत्र देवताप्रीतेरसम्भवात्। देवतायाश्चेतनत्वेऽपि तत्प्रीतेरनुद्देश्यत्वात्। प्रीतेः सुखस्वरूपत्वे न विष्णुप्रीत्यादौ तदसम्भवात्। जन्यसुखादेस्तत्राभावात्। तेन विष्णुप्रीतिजन्यत्वेन पराभिमतस्वर्गादिरेव विष्णुप्रीतिशब्देन लक्ष्यते। अधर्मो नरकादीनां हेतुर्निन्दितकर्म्मज इति। नरकदुःखादिसकलदुःखानां नारकिशरीरादीनाञ्च साधनमधर्म्म इत्यर्थः। १६२॥

प्रमाणमाह। प्रायश्चित्तादिनाश्योऽसौ। जीववृत्ती त्विमौ गुणाविति। यदि ह्यधर्म्मो न स्यात् तदा प्रायश्चित्तादिनाश्यत्वं न स्यात्। न हि तेन ब्रह्महननादीनां

शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः।
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः॥१६४
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते।

नाशः प्रतिबन्धो वा विधातुं शक्यते, तस्य पूर्वविनष्टत्वादिति भावः। जीवेति। ईश्वरस्य धर्म्माधर्म्माभावादिति भावः। इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यत इति। इमौ धर्म्माधर्म्मौ। वासनेति। अतो ज्ञानिना सुकृतदुष्कृतकर्म्मणी न फलायालमिति भावः। ज्ञानादपीत्यपिना भोगपरिग्रहः। ननु तत्त्वज्ञानस्य कथं धर्म्माधर्म्मनाशकत्वम्। नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति वचनविरोधात्। इत्थञ्च तत्त्वज्ञानिना झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेन्न। तत्र भोगस्य वेदबोधितनाशकोपलक्षितत्वात्। कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः। तदुक्तम्। ज्ञानाग्निः सर्वकर्माणीत्यादिना। श्रूयते च। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इति। ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादि च न स्यात् ज्ञानेन च सर्वेषां कर्मणां नाशादिति चेन्न। प्रारब्धेतरकर्मणामेव नाशात्। तत्तच्छरीरभोगजनकं हि यत् कर्म तत् प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति॥ १६३॥

शब्दं निरूपयति। शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः। कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः॥

वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता ॥१६५॥
कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते।
उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ॥१६६॥
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते।
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ॥१६७॥

इति श्रीमहामहोपाध्याय-विद्यानिवासभट्टाचार्य्य-
सुत-श्रीविश्वनाथपञ्चाननभट्टाचार्य्यविरचितो
भाषापरिच्छेदः समाप्तः।

सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते इति। नभोवृत्तिराकाशसमवेतः। दूरस्थशब्दस्याग्रहणादाह, श्रोत्रेति। ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह। वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तितेति। आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते। तेन चापरस्तद्व्यापकः। एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति ॥ १६४। १६५॥

कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते इति। आद्यशब्दाद् दशदिक्षु दशशब्दा उत्पद्यन्ते। ततश्चान्ये दशशब्दा उत्पद्यन्त इति भावः। अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मते इति। ननु शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह। उत्पन्नः को विनष्टः क इति बुद्धेरनित्यतेति। शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥१६६॥

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां

